

# “विद्युन्माला” बोधमञ्जरी



## चित्तत्त्वनिरूपणाख्यं तित्रिकम् शङ्करादि—
## पञ्चदेव स्तोत्र पञ्चकञ्च ।

श्रीशङ्करब्रह्मण्यदेवतीर्थस्वामिभिः प्रणीतम्

कालिकात्ता नगर्य्याम् राजस्थान
“यन्त्रालये” मुद्रितम् ।

विक्रमीयेऽष्टसप्ताङ्कभू १९७८ वर्षे

मूल्यम् भगवद्भक्तिः बोधोत्पत्तिश्च

प्रथमवार १०००

॥ ॐ ॥

# अथ विद्वन्माला ।

प्रणम्य परमात्मानं विदुषां प्रीति सिद्धये ।
विद्वन्माला निबद्धेयं विद्वन्माला निबद्ध्यते ॥ १ ॥
सक्तिः सत्सु प्रीतिर्दाने भक्तिर्गिरीशां त्तिश्च ते ।
शक्तिः पुण्येऽशक्तिः पापे सेयं साध्वी विद्वन्माला ॥ २ ॥
ज्ञाने मौनं क्षान्तिः शक्तौ त्यागे श्लाघां त्यक्ति नित्यम् ।
रक्तिः शास्त्रेऽरक्तिर्ग्राम्ये सेयं साध्वी विद्वन्माला ॥ ३ ॥
कामः क्रोधो लोभो दम्भः हिंसा स्तेयं मानस्तम्भः ।
एतैर्नाशो येयं चिन्ता सेयं साध्वी विद्वन्माला ॥ ४ ॥
मांसं मद्यं क्षुद्रैः सङ्गः योषित्सेवा मद्यैर्व्यंगः ।
एतैर्नित्यं नाशे चिन्ता सेयं साध्वी विद्वन्माला ॥ ५ ॥
सद्यः प्राणः प्रैतु प्रेष्ठः जातिर्यातु क्वापि श्रेष्ठा ।
धर्मो भूयाद्येयं चेष्टा सेयं साध्वी विद्वन्माला ॥ ६ ॥
तोषोऽस्तेयं चेर्ष्या पोहः सत्यं शौचं भूताद्रोहः ।
श्रेया एतेऽजस्रं चिन्ता सेयं साध्वी विद्वन्माला ॥ ७ ॥
भक्ष्यं भोज्यं लेह्यं चोष्यं भक्तै रेतैरेतत्पोष्यम् ।
तेषु श्रेयो भक्तो श्रद्धा सेयं साध्वी विद्वन्माला ॥ ८ ॥

सेव्या गङ्गा पापाविद्धा धार्या शान्तिः क्षान्तिः श्रद्धा ।
हेया भ्रान्तिर्भ्रष्टाण्यद्धा सेयं साध्वी विद्वन्माला ॥ ६ ॥
मर्षो मर्त्ये रोषाविष्टे इर्षो मर्त्ये पापाविष्टे ।
यैवं भूता शुभ्या दृष्टिः सेयं साध्वी विद्वन्माला ॥१० ॥
माता पित्रोर्भव्या भक्तिः स्वीया योषित्स्वस्ये सक्तिः ।
द्वन्द्वात्‍सृष्टिर्निन्द्यात्यक्तिः सेयं साध्वी विद्वन्माला ॥ ११ ॥
भद्रं रूपं भद्रो गन्धः भद्रः शब्दो भद्रः स्पर्शः ।
भद्रै रेतैरायुः क्षान्तिः सेयं साध्वी विद्वन्माला ॥ १२ ॥
भूषा नेयं शुभ्रैर्वेषैः पुष्पैर्हारैर्लेपैः केशैः ।
भूषा चेयं शुद्धा वाणी सेयं साध्वी विद्वन्माला ॥१३॥
तर्षोभर्त्ये पुण्योत्कृष्टे रोषोमर्त्ये पापाविष्टे ।
इत्थं भूता दिव्या दृष्टिः सेयं साध्वी विद्वन्माला ॥ १४ ॥
पूज्यो विप्रः सेव्या गृष्टिः ग्राह्यं नाम्रं त्याज्या धृष्टिः ।
यैवं भूता मृग्या सृष्टिः सेयं साध्वी विद्वन्माला ॥ १५ ॥
बुम्भिर्दानं हस्तैर्देयं श्रोत्रैः शास्त्रं भव्यं श्रेयम् ।
शुभ्रा चेयं चित्ते चिन्ता सेयं साध्वी विद्वन्माला ॥ १६ ॥
भव्या भ्रान्तिर्दुर्गे वन्यैः नाके नापि प्राज्ञं मन्यैः ।
सङ्गो यैषो तुङ्गा वृद्धिः सेयं साध्वी विद्वन्माला ॥ १७ ॥
दम्योदन्तो कुन्तैश्चण्डैः दम्या गावो वीरैर्दण्डैः ।
मूर्खोऽदम्यश्चेति प्रज्ञा सेयं साध्वी विद्वन्माला ॥ १८ ॥
भेषज्यैर्शैर्व्याधिर्हार्यः वह्निर्वीरैर्वारा वार्यः ।
मूर्खोऽवार्यश्चेति प्रज्ञा सेयं साध्वी विद्वन्माला ॥ १९ ॥

मन्त्रैर्वैपं चौर्य्यं वार्य्यं छत्रैः सौख्यं तेजो हास्यम् ।
मूर्खोऽस्वार्यश्चेति प्रज्ञा सेयं साध्वी विद्वन्माला ॥ २० ॥
वन्द्यो विष्णुर्निन्द्यः पापः कृत्वा कुत्स्यं पश्चात्तापः ।
यैवं भूता बुद्धेः शुद्धिः सेयं साध्वी विद्वन्माला ॥ २१ ॥
यस्यानर्थे सक्तं वित्तं क्षिप्त्वा धर्मे धत्ते वित्तम् ।
धर्मं धृत्वाऽनर्थाऽसक्तिः सेयं साध्वी विद्वन्माला ॥ २२ ॥
माने म्लाने वित्ते नष्टे क्षीणे वन्धौ मित्रे भ्रष्टे ।
गन्तुं गङ्गातीरं वाञ्छा सेयं साध्वी विद्वन्माला ॥ २३ ॥
दन्ते दीर्णे जाते तुण्डे केशैः कृष्णैर्मुक्ते मुण्डे ।
जीर्णे पिण्डे याऽऽशा मुक्तिः सेयं साध्वी विद्वन्माला ॥२४॥
स्नेहं छित्वा भित्त्वा प्रीतिं मोहं मुक्त्वा कृत्वा कीर्तिम् ।
तूर्णं पूर्णे पूर्णा प्रीतिः सेयं साध्वी विद्वन्माला ॥ २५ ॥
हास्यं हित्वा कार्या जल्पा चित्ते स्थाप्या शुम्भो स्वल्पा ।
क्षिप्त्वा शाठ्यं पात्रे दित्सा सेयं साध्वी विद्वन्माला ।२६॥
चित्वा क्षिप्रं षट्सम्पत्तिं बुद्ध्वा नित्याऽनित्ये चोभे ।
भोगे कुत्सा वाञ्छा मोक्षे सेयं साध्वी विद्वन्माला ॥२७॥
अर्थे लब्धे वा सन्तुष्टिः धर्मे पुष्टिः पापेऽपुष्टिः ।
चत्तो रुद्ध्वाऽरण्ये न्युष्टिः सेयं साध्वी विद्वन्माला ॥२८॥
हायं हायं दोषान् सर्वान् बद्ध्वा श्रद्धां श्रेयो जुष्टिः ।
यैषाऽक्लिष्टाऽनघा दृष्टिः सेयं साध्वी विद्वन्माला ॥ २९ ॥
जित्वा शत्रून् साक्षात् सर्वान् क्षिप्त्वा भोगान् दूरे ऽखर्वान् ।
चेतोऽरातेरन्ते निष्ठा सेयं साध्वी विद्वन्माला ॥ ३० ॥

हित्वा जन्तुर्देहं जीर्णं नव्यन्धत्ते चान्यं चीर्गम् ।
देहत्यक्तौ येषां बुद्धिः सेयं साध्वी विद्वन्माला ॥ ३१ ॥
ऐश्यं रूपं चित्ते धेयं सर्वञ्चान्यच्छीघ्रं हेयम् ।
यैत्थं भूताऽच्छिन्ना धारा सेयं साध्वी विद्वन्माला ॥ ३२ ॥
ज्ञानं हेयं हानोपायः ध्यानं ध्येयं ध्यानोपायः ।
येषां ज्ञप्तिः शून्या भ्रान्तेः सेयं साध्वी विद्वन्माला ॥ ३३ ॥
वासःकोऽयं देहे तस्मिन् वृद्धावस्था व्याधी यस्मिन् ।
येवं बुद्धवाऽबाधे वस्तिः सेयं साध्वी विद्वन्माला ॥३४ ॥
भिन्नात्कुम्भाद्भो यद्वन् गच्छत्यायुर्नित्यं तद्वत् ।
निश्चित्यैवं नित्ये निष्ठा सेयं साध्वी विद्वन्माला ॥ ३५ ॥
पीत्वा स्वन्तो नित्यं विश्वं पीत्वाऽविद्या मद्यं मत्तम् ।
यैवं ज्ञात्वाऽविद्याच्छित्तिः सेयं साध्वी विद्वन्माला ॥ ३६ ॥
नश्यत्यायुर्नक्तं सुप्त्या गच्छत्यन्हि व्यर्थं कृत्या ।
चेतोवृत्ते रीशे वृत्तिः सेयं साध्वी विद्वन्माला ॥ ३७ ॥
अन्ने शुद्धे भिक्षा-लब्धे कृत्वाऽनास्थां चित्तस्तब्धे ।
चीरैर्जीर्णैः कंथा क्लृप्तिः सेयं साध्वी विद्वन्माला ॥ ३८ ॥
स्तोकं वाप्यस्तोकं वित्तं दत्तं धात्रा लभ्येऽवश्यम् ।
मत्वा धैर्यं याञ्चा मुक्तिः सेयं साध्वी विद्वन्माला ॥ ३९ ॥
नासं सारे सारः कश्चित् येनैवं सारः सत्यैः सच्चित् ।
यैवं वेत्तुं विद्वद्दृष्टिः सेयं साध्वी विद्वन्माला ॥ ४० ॥
भूयो जातं भूयो नाशं दृष्ट्वा भूयो गर्भे वासम् ।
सुप्तश्चित्ते तत्संदृष्टिः सेयं साध्वी विद्वन्माला ॥ ४१ ॥

आशा वासोऽनाशा गेहे संन्यस्याशां वासो देहे ।
यैषा श्रेष्ठा साध्वी रीतिः सेयं साध्वी विद्वन्माला ॥ ४२ ॥

शय्या भूमिर्भुक्तिर्ज्ञानं गङ्गारोधस्यात्मध्यानम् ।
त्यक्त्वा मानं श्रेयश्चर्या सेयं साध्वी विद्वन्माला ॥ ४३ ॥

धैर्यं तातः क्षान्तिर्माता शान्तिर्भार्या सत्यं भ्राता ।
यस्याः सत्वे भिन्ना भीतिः सेयं साध्वी विद्वन्माला ॥ ४४ ॥

भोगो मेघोऽमोघः कश्चित् मत्वा मर्त्यानित्यं शश्वत् ।
सर्वस्याग्रे दैन्यन्यस्तिः सेयं साध्वी विद्वन्माला ॥ ४५ ॥

अर्थं दाते शुद्धे पात्रे शक्तो दद्यां रन्तुं गात्रे ।
या करुणां विद्वद्वर्या मर्त्या सेयं साध्वी विद्वन्माला ॥ ४६ ॥

रोगाहीशैर्देहे दष्टे यूनो भावे भोगैर्भ्रष्टे ।
श्रेष्ठा तीर्थे सद्भिश्चर्या सेयं साध्वी विद्वन्माला ॥ ४७ ॥

दृष्टेऽदृष्टे प्राप्ते भोगे तृष्णां त्यक्त्वा युक्त्वा योगे ।
वाञ्छा दृष्टिर्यासाऽवद्या सेयं साध्वी विद्वन्माला ॥ ४८ ॥

बोद्धुं बुद्धेरूर्ध्वं तत्त्वं हित्वा गेहे देहे स्वत्वम् ।
कामारातेर्नाशे चेष्टा सेयं साध्वी विद्वन्माला ॥४९॥

प्रातः शुद्ध्या यन्निष्पन्नं सायं सद्यो नश्यत्यन्नम् ।
तन्निष्पन्ने काये कुत्सा सेयं साध्वी विद्वन्माला ॥५०॥

भूतैरेभी रब्धःकायः भूतेष्वन्ते याति प्रायः ।
येत्थं ज्ञात्वा शोकाऽक्लिष्टिः सेयं साध्वी विद्वन्माला ॥५१॥

याता याता साकं भोगैः क्लिन्नः कायो ग्रस्तो रोगैः ।
यैवं ज्ञात्वा ज्ञेयं भूतिः सेयं साध्वी विद्वन्माला ॥ ५२ ॥

अर्थारण्ये गर्जन्नास्ते व्याघ्रास्योऽयं चेतो व्याघ्रः ।
तत्रारण्यं गन्तुं भीतिः सेयं साध्वी विद्युन्माला ॥ ५३ ॥

चेतो व्याघ्राज्ज्ञातं त्रासन् ज्ञप्तेर्मत्वा तस्यह्रासम् ।
ज्ञात्वा ब्रह्मज्ञासत्यक्तिः सेयं साध्वी विद्युन्माला ॥ ५४ ॥

नासौ लोको नोमे कालः चेत् या सक्तो चित्ते कालः ।
यैवं ज्ञात्वा चित्तासक्तिः सेयं साध्वी विद्युन्माला ॥ ५५ ॥

आशा यक्ष्याविष्टो जन्तुर्नैकलास्ते यद्वत्तन्तुः ।
आशा यक्ष्यायेयं पिष्टिः सेयं साध्वी विद्युन्माला ॥ ५६ ॥

चेतो रूपी मत्तोदन्तो सायं प्रातः पद्भिर्हन्ति ।
येयं चेतो दन्तिग्रस्तिः सेयं साध्वी विद्युन्माला ॥ ५७ ॥

शत्रौ मित्रे कृत्वा साम्यं भुक्त्वा भिक्षा लब्धश्चान्नम् ।
शून्यागारे साध्वी चिन्ता सेयं साध्वी विद्युन्माला ॥ ५८ ॥

कौमार्यं मे क्रीडा क्लृप्तौ तारुण्यं मे भार्या भक्तौ ।
व्यर्था यां येयं चिन्ता सेयं साध्वी विद्युन्माला ॥ ५९ ॥

हाहा कष्टं वृत्तं भ्रष्टं जीर्णो देहो चित्तं नष्टम् ।
या वार्द्धक्येऽपीत्थं चिन्ता सेयं साध्वी विद्युन्माला ॥ ६० ॥

तौ दैस्तुन्नं नित्यं चेतः नास्यध्येये नेतुं नेता ।
तस्यान्विष्टौ दीर्घा चिन्ता सेयं साध्वी विद्युन्माला ॥ ६१ ॥

प्राप्ते मृत्यौ नास्ति त्राता हित्वा विष्णुं कोऽपि भ्राता ।
विश्वस्यैवं विष्णौ वृत्तिः सेयं साध्वी विद्युन्माला ॥ ६२ ॥

कर्माक्रान्तस्सर्वो लोकः आत्मा कर्मासाध्योऽशोकः ।
वीक्ष्यैवं यात्तन्निर्वृत्तिः सेयं साध्वी विद्युन्माला ॥ ६३ ॥

आशा पाशै र्बद्धो बद्धो मुक्तश्चाशा पाशैर्मुक्तः ।
मुक्तं दृष्ट्वा याशामुक्तिः सेयं साध्वी विद्वन्माला ॥६४॥
शास्त्राधीतौ कामे शुद्धि र्विज्ञावाप्तौ कामे सिद्धिः ।
सिद्धिर्येयं ब्रह्मावाप्तिः सेयं साध्वी विद्वन्माला ॥ ६५ ॥
प्राप्तेऽपीष्टे पुत्रे वित्ते मोक्षस्याशानाप्ते चित्ते ।
येत्थं ज्ञात्वा मोक्षाकांक्षा सेयं साध्वी विद्वन्माला ॥ ६६ ॥
निष्कास्यैवं तृष्णा व्याली वेश्मा याता दुश्चण्डाली ।
या तादर्थ्या ज्ञप्तिर्यष्टिः सेयं साध्वी विद्वन्माला ॥६७॥
कःसंसारः कोऽहं वेत्ति प्राप्याचार्य्यं कर्त्री पृच्छा ।
त्यक्त्यालस्यं प्रष्टुं स्मृतिः सेयं साध्वी विद्वन्माला ॥ ६८ ॥
आत्मा लोकः प्राप्तो येषां किं पुत्रादाविच्छा तेषाम् ।
आत्म प्राप्तौ येच्छात्यक्तिः सेयं साध्वी विद्वन्माला ॥ ६९ ॥
हेयो हर्षो हृग्रावाप्तौ त्याज्यो मर्षो हेयप्राप्तौ ।
यैषा साध्वी चेतो वृत्तिः सेयं साध्वी विद्वन्माला ॥७०॥
एषा स्रष्टुः सृष्टिर्माया यस्यां बद्धो बन्धं धत्ते ।
भित्तिश्चास्या यैषा हीरुक् सेयं साध्वी विद्वन्माला ॥७१॥
दीपोऽवाते देशे यद्वत् स्थाप्यं योगे चित्तं तद्वत् ।
यैषा वृत्तिर्भद्रा साधोः सेयं साध्वी विद्वन्माला ॥७२॥
या सर्वेषां सान्द्रा रात्रि र्नेयं सुप्ति स्तस्यां युक्ता ।
सुप्तिर्येयं तेषां महि सेयं साध्वी विद्वन्माला ।७३॥
आत्मैवेदं बोधो यस्मिन्, को मोहः कः शोक स्तस्मिन् ।
बोधोत्था याऽदम्ना तृप्तिः, सेयं साध्वी विद्वन्माला ॥७४॥

नाहं देहो नाहं देही, कोशातीतं रूपं मे हि ।
कोशातीतेऽतीता बुद्धिः सेयं साध्वी विद्वन्माला ॥७५॥

नाहं शुक्लो नाहं पर्णी नाहं भिक्षुर्नाहं वर्णी ।
इत्थं भूते धैर्यं बुद्धिः सेयं साध्वी विद्वन्माला ॥७६॥
अज्ञानात्तं सत्यं शश्वत् भिन्नं चातः खिन्नं नश्यत् ।
ब्रह्मण्येषा ऽनात्तां बुद्धिः सेयं साध्वी विद्वन्माला ॥७७॥
नास्ति द्रष्टृ दृष्टे लोपः यस्मिन्नेतद्दृष्ट्वा रोपः ।
द्रष्टृ दृष्टा वेषा बुद्धिः सेयं साध्वी विद्वन्माला ॥७८॥
कार्ये त्यक्त्वा खर्वं गर्वं बाधित्वेदं बाध्यं सर्वम् ।
बाधा ऽऽधारे ऽबाधा बुद्धिः सेयं साध्वी विद्वन्माला ॥७९॥
अन्नं प्राणश्चित्तं बुद्धिः सौख्यं चैतैरात्मा शुद्धिः ।
एभ्यःशोद्धुं युक्ता युक्तिः सेयं साध्वी विद्वन्माला ॥८०॥
यावन्नात्मा युक्त्या शुद्धः तावन्नायं पापा विद्धः ।
युक्त्या शुद्धो पापाविद्धिः सेयं साध्वी विद्वन्माला ॥८१॥
आत्मा शुद्धो नित्योऽनाशी देहोऽशुद्धोऽनित्यो नाशी ।
एवं रूपा या संवित्तिः सेयं साध्वी विद्वन्माला ॥८२॥
जित्वा कामं छित्त्वा लोभं सर्वं क्षिप्त्वा चित्त क्षोभम् ।
या निष्पीडा स्वस्मिन्क्रीडा सेयं साध्वी विद्वन्माला ॥८३॥
प्राणापानौ मर्त्यामृत्योः हेतू न स्तो यस्मिन्नेतौ ।
तस्मिन्नेषाऽक्षय्या दृष्टिः सेयं साध्वी विद्वन्माला ॥८४॥
बाले वृद्धे मूढे प्राज्ञे भद्रेऽभद्रे मेधे छागे ।
एकं तत्त्वं धैर्यं प्रेक्षा सेयं साध्वी विद्वन्माला ॥८५॥

सर्वाधारं यावन्नाप्तं तावद्विश्वं सर्वं भातम् ।
अस्मिन्नाप्ते ऽसत्त्वा पत्तिः सेयं साध्वी विद्वन्माला ॥ ८६ ॥

बुद्ध्या बुद्धो नायं बुद्धः सोऽयं बोधाविद्धो बुद्धः ।
येयं बोधाविद्धे बुद्धिः सेयं साध्वी विद्वन्माला ॥ ८७ ॥

आत्मा नायं व्याख्यारभ्यः श्रुत्या मत्या नायं लभ्यः ।
या विज्ञो कथाव्यक्तालब्धिः सेयं साध्वी विद्वन्माला ॥८८॥

अम्भस्सिक्तं शुद्धे यद्वत् बोधु वृंद्वं रूां तद्वत् ।
यैवं रूपा रूोरक्तिः सेयं साध्वी विद्वन्माला ॥ ८६ ॥

वेदाभिज्ञं विज्ञं गत्वा ब्रह्माकायं कं खं दृष्ट्वा ।
या शुभी त्योर्दूरेक्षिप्तिः सेयं साध्वी विद्वन्माला ॥ ६० ॥

आत्मा ज्ञातः शान्तैर्धीरैः नायं लब्धोऽशान्तैर्वीरैः ।
येत्थं बुद्ध्वा शान्तेर्लब्धिः सेयं साध्वी विद्वन्माला ॥६१॥

नोलब्धव्यं लब्धे यस्मिन् धीरैर्धार्या दृष्टिरतस्मिन् ।
यैवं दृष्टे लब्धुर्लब्धिः सेयं साध्वी विद्वन्माला ॥ ६२ ॥

द्रष्टुर्दृष्टिं ब्रूते वेदः चेतो ग्रन्थेश्चेतोभेदः ।
दृष्ट्या वस्यां याऽसंदिग्धिः सेयं साध्वी विद्वन्माला ॥६३॥

वृद्धि ह्रासौ नो यत्नस्तः कूटस्थोज्ञः शुद्धः शस्तः ।
कूटस्थेया ऽकूटा बुद्धिः सेयं साध्वी विद्वन्माला ॥ ६४ ॥

तिस्रो ऽवस्था भेदैर्भिन्ना नात्मा भेदैर्भिन्नस्साक्षी ।
साक्षिण्येषा ऽक्षीणा दृष्टिः सेयं साध्वी विद्वन्माला ॥ ६५ ॥

आत्मा नायं बद्धो बन्धैः बद्धो ज्ञातो मूढै रन्धैः ।
यैषाऽबद्धे बद्धा दृष्टिः सेयं साध्वी विद्वन्माला ॥ ६६ ॥

आत्मा भुञ्जन् कुर्वन् पूतः सर्वा सक्तः सर्वं स्यूतः ।
येयं स्यूते स्यूता दृष्टिः सेयं साध्वी विद्वन्माला ॥ ६७ ॥
मुक्ते .र्ज्ञाना न्नान्यः पन्थाः सर्वोपाय श्चान्यः कन्था ।
यैवं मुक्त्यै व्यक्ता विक्तिः सेयं साध्वी विद्वन्माला ॥९८॥
आत्मा भूतेष्वास्ते गूढः तन्नोवेत्ति प्रज्ञा मूढः ।
प्रज्ञानेत्रैर्या तद्दृ दृष्टिः सेयं साध्वी विद्वन्माला ॥ ९९ ॥
यस्य प्रीत्यै प्रेष्ठोऽनात्मा स द्रष्टव्यो धीरै रात्मा ।
तद्विज्ञात्यै विज्ञासक्तिः सेयं साध्वी विद्वन्माला ॥ १०० ॥
मृत्योर्मृत्युं यांति भ्रष्टः येनैवात्मा नाना दृष्टः ।
भेदं भित्त्वा ऽभिन्ना दृष्टिः सेयं साध्वी विद्वन्माला ॥१०१॥
ऐश्या दृष्ट्या त्यक्तं विश्वं त्यागेनै तैनैतद्रक्ष्यम् ।
विश्व त्यागे कांक्षा हानिः सेयं साध्वी विद्वन्माला ॥१०२॥
नात्मा वेद्यो वेदैः सर्वैः विज्ञैर्वेदै र्ज्ञातोऽ गर्वैः ।
निर्विद्वेद्ये ऽवेद्या दृष्टिः सेयं साध्वी विद्वन्माला ॥ १०३ ॥
सर्वे लोका यस्मिन्निष्ठाः धीरैः कैश्चिद्द यत्नाद्द दृष्टः ।
तस्यान्विष्टौ यैषा यस्तिः सेयं साध्वी विद्वन्माला ॥ १०४ ॥
सूक्ष्मो ज्ञातो वाचोमुक्त्या सूक्ष्मे सूक्ष्मां बुद्धिं युक्त्वा ।
ज्ञातुं सूक्ष्मं वाचो मुक्तिः सेयं साध्वी विद्वन्माला ॥ १०५ ॥
मृत्वा मृत्वा वृत्तिस्तावत् ब्रह्म ज्ञप्ति जंन्तो यावत् ।
ब्रह्म ज्ञप्तौ ब्रह्मापीतिः सेयं साध्वी विद्वन्माला ॥ १०६ ॥
तन्तुष्वास्ते वस्त्रं यद्वत् चित्तं साम्ये चा स्तां तद्वत् ।
इत्थं श्रेष्ठा चेत श्चेष्टा सेयं साध्वी विद्वन्माला ॥ १०७ ॥

भङ्क्त्वा भीतिं स्थित्वैकाकी नाहं मर्त्यो नाहं नाकी ।
योऽसौ सोऽहं येयं चिन्ता सेयं साध्वी विद्वन्माला ॥ १०८॥
बाण श्चितं तारश्चापः वेध्यो लक्ष्यश्चात्मा ऽपापः ।
विद्धे तस्मिन्नैक्यापत्तिः सेयं साध्वी विद्वन्माला ॥ १०९ ॥
इय मष्टो त्तरीमाला धार्या कण्ठे सदा बुधैः ।
ब्रह्मण्य देव यतिना ग्रथिता ग्रन्थिभित्तये ॥ ११० ॥

---

इतिश्री मत्परमहंस परिव्राजकाचार्य्य गोवर्द्धन मठाधीश्वर
शङ्कराचार्य्य श्रीमन् मधुसूदन तीर्थ स्वामि शिष्य
पण्डित स्वामि श्रीशङ्कर ब्रह्मण्यदेव तीर्थ
विरचिता विद्वन्माला ।





॥ ॐ ॥

# अथ बोध मञ्जरी ।

योऽयंदेव श्शुद्धो गूढ़ः साक्षी चेताः पूर्णोऽव्यूढः ।
सोऽहं चित्ते चिन्तय नित्यं त्यक्त्वा सर्वं वाह्यं कृत्यम् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढ़मते ॥ १ ॥
वेदैर्वेद्यं विदितं तत्त्वं हायं हायं तुषवत्स्वत्वम् ।
पिष्ट्वा ऽवोधं कृत्वा चूर्णं व्रह्मैवाहं निश्चिनु तूर्णम् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ २ ॥
स्रष्टा सृज्यं स्वयमेवासि सृष्ट्वा सृष्टिं स त्वं भासि ।
ग्राह्यो ऽग्राह्यस्त्वं सुखराशिः त्वत्तो भास्यो ऽखिल प्रकाशी ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ३ ॥
ऊर्ध्वं चाधः पुरतः पृष्ठे नष्टे भ्रष्टे विमतौ धृष्टे ।
एकं स्यूतं वेदश्रेष्ठे स त्वं त्वमसौ भेदे नष्टे ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ४ ॥
देशे विक्ते ऽवश्यं ध्येयं नास्ति ग्राह्यं किं मे हेयम् ।
आत्मा ऽज्ञेयो ऽग्राह्यः शुद्धः नैवं वोद्धुं शक्यो ऽवुद्धः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ५ ॥

शुष्कै स्तर्कैर्यन्नोज्ञेयं मानैः सर्वैर्यन्नो मेयम्।
त्वं तत्तत्त्वं द्रष्टं हेयं हित्वा द्रष्टं किन्ते ध्येयम्॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते॥ ६॥
जाग्रत्स्वप्न प्रसुप्ति भेदैः भिन्नं विश्वं खिन्नं खेदैः।
भेदैरेतैर्योऽसम्भिन्नः साक्षी त्वन्नो खेदैः खिन्नः॥
त्यज संमोहं त्यज समोहं संमोहं त्यज मूढमते॥ ७॥
भासा तेऽयं भानुर्भाति शक्त्या तेऽयं वातो वाति॥
तेजस्तेऽयं चन्द्र विकाशः कालत्रितये ते नो नाशः॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते॥ ८॥
धत्ते धरणीं योऽयमहीन्द्रः तड़ितस्ताराः स्त्रः पतिरिन्द्रः।
इतरे ये ये निष्ठा गर्वे शासन निरतास्ते ते सर्वे॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते॥ ९॥
नेन्द्रिय प्रीतौ पिपृहि तोषम् प्राप्ते खेदे मा भज रोषम्।
मा मित्रे धेहि कश्चिद्दोषम् माकुरु माकुरु चात्मनिमोषम्॥
त्यज संमोहं त्यज संमोहं सांमोहं त्यज मूढमते॥ १०॥
बद्ध्वा श्रद्धां कुरु सत्सङ्गम् जित्वाऽजय्यं शत्रु मनङ्गम्।
बुद्ध्वा बुद्धेः परतोऽभङ्गम् भूयो माविश संसृतिरङ्गम्॥
त्यज संमोहं त्यज संमोहं संमोउं त्यज मूढमते॥ ११॥
तीर्त्वा सिन्धुं त्वंवस दूरे देहं पातय नद्याः पूरे।
कुरुषे यावन्नात्म निरोधं न त्वं धास्यसि तावद्बोधम्।
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते॥ १२॥

धारय वस्त्रै वर्णं चित्रम् पर्यट कृत्वा भूपति मित्रम् ।
छेदय भेदय नाशय सर्वं हरते कालोऽखर्वं गर्वम् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ १३ ॥

क्षिप्त्वा कालं परधन हरणे यत्नं माकुरु देहाभरणे ।
नाशय शीघ्रं दोषावरणे कोऽपि नरक्षति प्राप्ते मरणे ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ १४ ॥

संसारोऽयं किल निस्सारः सारश्चै कस्सकलाधारः ।
इति परि शीलय माशुच जातु तापस्तेऽयं सद्यो यातु ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ १५ ॥

भूत्वा भिक्षुस्तीर्थमजस्रं विभो भूत्वा शास्त्र सहस्रम् ।
भ्रम पठ योगैस्तापय देहं मोक्षो नो ते दापय गेहम् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ १६ ॥

हा हा कृत्वा त्रोटय तुण्डं क्षिप्त्वा क्षिप्त्वा स्फोटय मुण्डम् ।
हुत्वा वन्हौ त्वं दह पिण्डं मुक्तिर्नो ते धारय दण्डन् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ १७ ॥

नहि ते वर्णो नो ते गोत्रं नहि त्वं श्रोता नोते श्रोत्रम् ।
नहि त्वं होता नोते होत्रं नहि त्वं स्तोता नोते स्तोत्रम् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ १८ ॥

नहि त्वं गन्ता नहिते गमनं नहि त्वं नन्ता नहिते नमनम् ।
नहि ते वासो न त्वं वासी यच्छुद्धतत्त्वं तद्ब्रह्मासि ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ १९ ॥

नहि ते रोगो नत्वं रोगी नहि ते भोगो नत्वं भोगी ।
नहि ते शोको नत्वं शोकी नहि ते लोको नत्वं लोकी ।
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ २० ॥
नहि ते वन्धुर्नो ते वित्तं नहि ते वातो नो ते पित्तम् ।
नहि ते मृत्युर्नत्वं जातः नो ते जननी नो ते तातः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ २१ ॥
नहित्वं प्रष्टा नोते प्रश्नः नहित्वं जाग्रन्नोतेस्वप्नः ॥
नहित्वं सुप्तोनोतेसुप्तिः नत्वं वद्धो नहिते मुक्तिः ॥
त्यज संमोहंत्यजसंमोहं संमोहं त्यज मूढ़मते ॥ २२ ॥
नत्वं वोद्धा नहि ते बुद्धिः नत्वं भ्रष्टो नहि ते शुद्धिः ।
नत्वं देही नहिते देहः नत्वं स्नेही नहि ते स्नेहः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ २३ ॥
नत्वं वालो नत्वं प्रौनः वृद्धो नत्वं नहित्वं दीनः ॥
नत्वं योगी नहित्वं सिद्धः शत्रुर्न्ने नहित्वं विद्धः ।
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढ़मते ॥२४॥
नत्वं मूढ़ोनत्वं ज्ञानी नहितेमानो नत्वं मानी ॥
नत्वं भोक्ता नत्वं तृप्तः नोते गर्वो नत्वं दृप्तः ।
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥२५॥
नत्वंचण्डो नहिते चण्डः नत्वं पुरुषोनत्वं पण्डः ।
नत्वं दण्डी नहिते दण्डः । नत्वं खण्डी नहिते खण्डः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥२६॥

नत्वं भिक्षुर्नापि गृहस्थः नत्वं मौञ्जी नापि वनस्थः ।
नत्वं सेव्यो नहि ते सेवा त्वमस्य छेद्यो ऽभेद्यो देवः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ २७ ॥

विद्धि त्वं मे वाचस्तथ्यम् वेदो ब्रूते सर्वं पथ्यम् ।
मृत्योर्मृत्यो नौते भीतिः लोके वेदे चैषा गीतिः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ २८ ॥

कृत्वा लक्ष्यं त्वं निर्वाणम् धनुषि प्रणवे चेतो वाणम् ।
धृत्वा क्षिप्तं वेधय लक्ष्यं विद्धे तस्मिन्नो ते रक्ष्यम् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ २९ ॥

नष्टं बाल्यं क्रीडा सक्तो त्वत्तारुण्यं भार्या भक्तो ।
बोधक्षयेऽपिच यदि ते बोधः नह्युत्पत्ति नहि ते रोधः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ३० ॥

तिष्ठैकाकी संश्रित सानुः पीडय पिंडं पिंडित जानुः ।
मुक्ति नहि ते त्वं भव भानुः दीप्तो यावन्मोह कृशानुः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ३१ ॥

तावत्पूज्यस्तावद्दासः तावद्भूयो गर्भे वासः ।
तावतेऽयं सर्वः क्लेशः यावत्तेऽयं मोहावेशः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ३२ ॥

भृत्यं शूरं शोणित नेत्रं द्वारि स्थापय दत्त्वा वेत्रं ।
रंजय वासो वापय केशम् मुक्ति नहि ते त्वं त्यज देशं ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ३३ ॥

नारी देहो मांसं स्नायुः विष्ठा कुंडं यस्मिन् पांयुः।
व्यर्थैः कृत्यैर्नश्यत्यायुः हरति प्रज्ञां तृष्णा वायुः॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते॥ ३४॥

मरु प्रदेशे तरणि मरीचिः सरिदिव भाति बहु भव वीचिः।
वेद्या विषया स्तद्वत्सर्वे मापत मापत गर्त्तेऽखर्वे॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते॥३५॥

क्षिप त्वं विषयानेवं क्षिप्रं चेदोऽधीतोऽविरतं विप्रम्।
एते विषया विषवत् फणिनः सन्तो दष्टाः काते गणना॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते॥३६॥

त्यक्त्वा क्षीरं मापिव मण्डं कालो दास्यति शिरसि हि दण्डम्।
नायं पश्यति मत्तः कालः क्रीडा सक्तो यद्वद्बालः॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते॥३७॥

जननी पुत्रं व्यर्थं सूते रक्ता वुद्धिर्यस्यद्युते।
नो संरक्ता ब्रह्मणि पूते शुद्धे बुद्धं सर्वस्यूते॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते॥३८॥

यावद्दन्तौ स्तुण्डं ललितं यावन्नो ते मुण्डं पलितम्॥
तावत्सेयं तरुणी रक्ता पलिते मुण्डे सापि न भक्ता॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते॥३९॥

कृत्वा पादौ द्वावुत्तानौ रुद्ध्वा चोभौ प्राणापानौ।
मा कुरु भूमौ मुण्डं नित्यं मोघश्चैतत्सर्वं कृत्यम्॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते॥४०॥

ऊर्ध्वं वाश्रय दीर्घ वितानं पृष्ठे पुष्टं श्रेहि पधानम् ॥
मृदु नि स्तरणे कुरु विश्रामं वांछसि मुक्तिं जहि जहि कामम्॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥४१॥

तावत्संसृति चक्रा रोहः यावन्नायं भेदा पोहः ।
भेदा पोहे भग्ना युक्तिः ज्ञात्वा ज्ञेयं मोह विमुक्तिः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥४२॥

स्मारं स्मारं संसृति खेदं ताप वाधं निखिलच्छेदम् ।
दाहं दाहं द्विष्टं भेदं त्वं जप तारं कुरु निर्वेदम् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ४३ ॥

दृष्ट्वा च्छायां मापत कूपे दृष्टिं श्रेहि त्वमात्म रूपे ।
चक्रिः परिर्जल्पितैः गर्जं गर्जं जहि शीघ्रं शोकम् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ४४ ॥

भार्य्या भरणे यातः कालः चिन्तय चेतसि तत्वं बालः ।
वहसि भारं त्वं बली वर्दः साक्षं पास्यति कापक पर्दः ॥
त्यज संमोहं त्यजसंमोहं संमोहं त्यज मूढमते ॥ ४५ ॥

कृत्वा कूटं दुर्व्यवहारं तत्वं वञ्चय वारं वारम् ।
त्यक्त्वा सम्प्रति सर्वं विकारं चिन्तय तन्त्वं तर संसारम् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ४६ ॥

सोहं गीता स्वप्ने ऽतीता संविद् गीता त्वनो भीता ।
शुभ कृत गीता किञ्चिद धीता दुष्कृत गीता सर्वा पीता ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥४७॥

आत्मैवत्वमशोकोऽपारः नत्वं देहो भूतविकारः ।
कोऽहं कस्त्वं कस्संसारः किन्ते नायं वृथा विचारः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥४८॥

त्वं तप तूष्णीं तोयनिमग्नः क्षिप वा वासो भूत्वा नग्नः ।
नो ते मुक्तिस्त्वं भव भग्नः यावन्मोह पिशाचो लग्नः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥४९॥

धाव धाव छिन्धि मोह पाशं नोचेद्यास्यसि क्षिप्रं नाशम् ।
पश्य पश्य पृष्ठे ते व्याधः मुक्तः कोऽपि न बद्ध पराधः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ५० ॥

पूजय पूज्यं भाजय भाज्यं त्याजय त्याज्यं याजय याज्यम् ।
द्रापय विदुषे पात्रं साज्यं मोहं मार्जय कुरु निज राज्यम् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ५१ ॥

अनृतुपद्यो सोपं मोषं अजीवनद्युयो घोपं घोषम् ।
अजीज नद्युयो दुःखं घोरं मारय मोहं तंसुख चोरम् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ५२ ॥

चारं चारं यो वरी वर्त्ति दण्डा दण्डियो दरी दर्त्ति ।
मत्तो मोहो यो नरी नर्त्ति नायं त्याग मुने मरी मर्त्ति ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ५३ ॥

तावत्सर्वा संचिक्कीर्षा तावद् बद्धा देह दिधीर्षा ।
तावत्तरुणी चित्त जिहीर्षा यावन्नेयं मोहतितीर्षा ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ५४ ॥

नाहं चक्रि नाहं चक्रुः नाहं पत्रिर्नाहं पत्रुः ।
नोमे पाट्यं नोमे ताड्यम् निश्चिन्वेयं त्याज्यं जाड्यम् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ५५ ॥
ओजढो ननु त्रिविधं तापम् पायं पायं मोहं पापं ।
एनं, नाशय धृत शर चापम् मुञ्च मुञ्च वा दत्त्वा शापम् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ५६ ॥
अटवी येयं गृद्ध कृत नीडा तस्या मटतः कापिन पीडा ।
येयं रम्या ब्रह्मणि क्रीडा तस्यां व्रजतो वृहती व्रीडा ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ५७ ॥
धावं धावं गच्छसि तत्र सत्कृति विष्टा पतिता यत्र ।
त्वं तत्र यासि मन्दं मन्दं वर्षति मेघो यत्रानन्दम् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ५८ ॥
हंसस्सन्नपि तावत् काकः यावल्लग्नः कर्म्म विपाकः ।
सरित्प्रवाहो यद्वत् कूलं तद्वत्पाटय कृत्या मूलम् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ५९ ॥
जंजनीतु तव देहो दुष्टः पापतीतु वा ते संपुष्टः ।
अवीविशो यस्सृष्टिं स्रष्टा सम्बंभ्रमीषि सत्वं भ्रष्टः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ६० ॥
धृत्वाऽसंगं निशितं शस्त्रं वद्ध्वा कस्यां वोधं वस्त्रम् ।
पातय तूर्णं त्वं द्रुम मेतम् कामादिक वहु पक्षि निकेतम् ॥
त्यज संमोहं त्यज समोहं संमोहं त्यज मूढमते ॥ ६१ ॥
लब्ध्वा ऽलभ्यं मानुष देहम् त्वं त्यज दूरे सर्व स्नेहं ।
लोकः सर्वः स्वार्थं लग्नः ब्रह्मणि शुद्धे त्वं भव मग्नः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ६२ ॥

ब्रह्मैवत्वं शुद्धो गूढः व्यर्थं मा शुच भूत्वा मूढः ।
पश्यतु नश्यतु सकलो लोकः नत्वयि मोहो नत्वयि शोकः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ६३ ॥
माभज मोहं चिन्तय सोहं कृत्वा दूरे कोऽहं कोऽहं ।
माभैस्त्वं कुरु जन्मापोहम् नष्टं याति न भूयो रोहम् ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ६४ ॥
नायं नश्यति तावत् खेदः यावन्नहि ते जन्मोच्छेदः ।
ब्रह्मैवेदं नायं भेदः सत्यं सत्यं ब्रूते वेदः ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ६५ ॥
मञ्जर्येषा रम्याऽमेया मत्वा चेत्थं विष्णौ धेया ।
येनैवेयं विष्णौ निहिता तेनैवार्चा सर्वा विहिता ॥
त्यज संमोहं त्यज संमोहं संमोहं त्यज मूढमते ॥ ६६ ॥

---

इतिश्रीमत्परमहंस परिव्राजकाचार्य्य गोवर्द्धन मठाधीश्वर
शङ्कराचार्य्य श्रीमन् मधुसूदन तीर्थ स्वामि शिष्य
पण्डित स्वामि श्री शङ्कर ब्रह्मण्यदेव तीर्थ
विरचिता बोधमञ्जरी ।



ओ३म् ।

# अथ चित्तत्त्वनिरूपणम् ।

प्रत्यक् शान्तं मानातीतं कर्माध्यक्षं सर्वावासम् ।
एकं गूढं सत्यं नित्यं यच्चित्तत्त्वं तद् ब्रह्माहम् ॥१॥
विद्युत्तारा सूर्यश्चेन्दुर्यैर्नाभान्ति स्वस्मिन् सम्यक् ।
नैतैर्भास्यं सद्भारूपं यच्चित्तत्त्वं तद्ब्रह्माहम् ॥२॥
पाणीपादौ नेत्रे श्रोत्रे नो यस्यस्तो गन्तादात् ।
मुख्यं द्रष्टृ श्रोतृ ज्ञातृ यच्चित्तत्त्वं तद्ब्रह्माहम् ॥३॥
वायुर्वह्निः सूर्यश्चेन्द्रो मृत्युश्चैषां भीतिर्यस्मात् ।
नो भीर्यस्य ज्ञातुर्ज्ञातृ यच्चित्तत्त्वं तद्ब्रह्माहम् ॥४॥
यस्य श्रीहि ब्रह्मक्षत्रे मृत्युर्यो यस्यास्त्याज्यम् ।
नेत्थं वेद्यं सर्वव्याप्तं यच्चित्तत्त्वं तद्ब्रह्माहम् ॥५॥
विद्धं यं दोषाबाध्यं बाधाधारं बाधाहीनम् ।
बोधाविद्धं शुद्धं बुद्धं यच्चित्तत्त्वं तद्ब्रह्माहम् ॥६॥
अङ्घ्रेरङ्घ्रिर्वाचो वाचा श्रोत्रश्रोत्रं चक्षुश्चक्षुः ।
घ्राणघ्राणं कालाभूतं यच्चित्तत्त्वं तद्ब्रह्माहम् ॥७॥
नो यत्पूर्वं नो यत्कार्यं नो यत्कस्तत्साध्याधिक्ये ।
नो यद्धीकं प्राणत्राणौ यच्चित्तत्त्वं तद्ब्रह्माहम् ॥८॥

नो यस्यान्तो नो यद्ग्राह्यं नो यस्यादिर्नो यद् बाह्यम् ।
नो यद् दृश्यं द्रष्टुर्दृष्टं यच्चित्तत्त्वं तद्ब्रह्माहम् ॥९॥

नाहं देवो नाहं यक्षः नाहं मर्त्यो नाहं रक्षः ।
नाहं मूढो नाहं दक्षः यच्चित्तत्त्वं तद्ब्रह्माहम् ॥ १० ॥

नाहं विप्रो नाहं क्षत्रं नाहं वैश्यो नाहं शूद्रः ।
नाहं देहो नाहं देही यच्चित्तत्त्वं तद्ब्रह्माहम् ॥ ११ ॥

नाहं पूज्यो नाहं भक्तः नाहं भिक्षुर्नाहं रक्तः ।
नाहं क्षीणो नाहं शक्तः यच्चित्तत्त्वं तद्ब्रह्माहम् ॥१२॥

नाहं जङ्घा नाहं कक्षा नाहं पृष्ठं नाहं वक्षः ।
नाहं पक्षी नाहं पक्षः यच्चित्तत्त्वं तद्ब्रह्माहम् ॥१३॥

नाहं दाह्यो नाहं दग्धा नाहं वाच्यो नाहं वक्ता ।
नाहं ग्राह्यो नाहं त्यक्ता यच्चित्तत्त्वं तद्ब्रह्माहम् ॥१४॥

नाहं छेद्यो नाहं छेत्ता नाहं क्लेद्यो नाहं क्लेत्ता ।
नाहं भेद्यो नाहं भेत्ता यच्चित्तत्त्वं तद्ब्रह्माहम् ॥१५॥

नाहं वेद्यो नाहं वेत्ता नाहं क्रय्यो नाहं क्रेता ।
नाहं जय्यो नाहं जेता यच्चित्तत्त्वं तद्ब्रह्माहम् ॥१६॥

देवे दैत्ये शुद्धे हीने मन्दे मर्त्ये दीनेऽधीने ।
तन्त्रे मन्त्रे यज्ञे रात्रौ यच्चित्तत्त्वं तद्ब्रह्माहम् ॥१७॥

वाह्येऽवाह्ये धाराधारे वह्नौ [illegible] देहोहारे ।
सर्पे रूप्ये शुक्तौ रज्जौ यच्चित्तत्त्वं तद्ब्रह्माहम् ॥१८॥

रागे रोगे भोगे शोके कार्ये कार्ये योगे लोके ।
भोग्ये काम्ये साम्येऽसाम्ये यच्चित्तत्त्वं तद्ब्रह्माहम् ॥१९॥

कृष्णे शुक्ले पीते रक्ते लोभे क्रोधे सक्ते भक्ते ।
बोधे रागे यागे भागे यच्चित्तत्त्वं तद्ब्रह्माहम् ।।२०।।
शस्त्रे छेद्ये शास्त्रे वेदे सारेऽसारे भेदेऽभेदे ।
पापे पुण्ये ह्रस्वे दीर्घे यच्चित्तत्त्वं तद्ब्रह्माहम् ।।२१।।
शत्रौ मित्रे पुत्रेऽमत्ये वैश्ये विप्रे शूद्रे क्षत्रे ।
म्लेच्छे वृक्षे कृच्छ्रे छत्रे यच्चित्तत्त्वं तद्ब्रह्माहम् ।।२२।।
नेत्रे रूपे घ्राणे गन्धे श्रोत्रे शब्देस्पर्शे सङ्गे ।
हस्ते पादे गुह्ये लिङ्गे यच्चित्तत्त्वं तद्ब्रह्माहम् ।।२३।।
भक्ष्ये भोज्ये लेह्ये चोष्ये हृद्ये हार्दे पेये पोष्ये ।
भाष्येऽभाष्ये कार्येऽकार्ये यच्चित्तत्त्वं तद्ब्रह्माहम् ।।२४।।
प्राणे बुद्धौ वध्ये बन्धौ स्वप्ने सुप्तौ बोधे सन्धौ ।
स्थूले सूक्ष्मे हेतौ पिण्डे यच्चित्तत्त्वं तद्ब्रह्माहम् ।।२५।।
आद्यावन्ते मध्ये काले विश्वे स्वाप्ने प्राज्ञे भाले ।
हानौ हेये मुण्डे तुण्डे यच्चित्तत्त्वं तद्ब्रह्माहम् ।।२६।।
भस्मे भानौ चन्द्रे चारे भूमौ नीरे वायौ वारे ।
शक्रे चक्रे तक्रे नक्रे यच्चित्तत्त्वं तद्ब्रह्माहम् ।।२७।।
बाले वृद्धे यूनि प्राज्ञे गूढे मूढे मेषे छागे ।
चण्डे मण्डे गण्डे खण्डे यच्चित्तत्त्वं तद्ब्रह्माहम् ।।२८।।
यक्षे पक्षेऽध्यक्षे लक्ष्ये कक्षे दक्षे रक्षो भक्ष्ये ।
हव्ये कव्ये गद्ये पद्ये यच्चित्तत्त्वं तद्ब्रह्माहम् ।।२९।।
मत्ते धूर्ते घोरे क्रूरे चित्ते वित्ते वस्त्रे चीरे ।
वादे वासे नद्यास्तीरे यच्चित्तत्त्वं तद् ब्रह्माहम् ।।३०।।

ग्रामे पथ्ये रथ्या पङ्के शान्ते भ्रान्ते दान्ते रङ्के ॥
लोके श्रेष्ठे मध्ये तङ्के यच्चित्तत्त्वं तद्ब्रह्माहम् ॥ ३१ ॥
कूपे वाप्यां पाथः पाले कोले सूच्यां शंकौ दात्रे ॥
श्लाघ्येऽध्याप्ये प्रन्थे छात्रे यच्चित्तत्त्व तद् ब्रह्माहम् ॥३२॥
नाट्ये गेये गाने गाथे माने मेये मोदे बाधे ॥
सिद्धे साध्ये सिद्धौ संधे यच्चित्तत्त्वं तद्ब्रह्माहम् ॥३३॥
मद्रे क्षुद्रे भद्रे भङ्गे कृष्णे कीटे रामे रङ्गे ।
सभ्ये भव्ये गव्येऽसङ्गे यच्चित्तत्त्वं तद्ब्रह्माहम् ॥३४॥
वर्णे पर्णे सर्णे कन्ध्रे विन्ध्ये सिन्धौ गर्ते रन्ध्रे ।
सर्वाभासं साक्षात्साक्षि यच्चित्तत्त्वं तद्ब्रह्माहम् ॥३५॥
दुग्धं सर्पिर्दग्धं दाहः मेदो मज्जा मुग्धं वाहः ।
धेनुर्हस्ती तीरे गाहः माया मोहोऽसत्सन्नाहः ॥३६॥
भारो भारी भेरी दण्डः वालो वृद्धो भार्या पण्डः ।
धूर्त्तो मूर्खो मत्तो भण्डः कामी वामी लोभी चण्डः ॥३७॥
ब्रह्मा विष्णुः शम्भुर्गङ्गा गेयं गम्यं गीता नङ्गः ।
ध्येयं ध्यानं ध्याता भङ्गः द्रष्टा दृश्यं नाट्यं रङ्गः ॥३८॥
यानं यामस्सायं प्रातः मित्रं पुत्रो माता भ्राता ।
भानं भाव्यं भामा तातः यागोऽध्वर्युः स्तोतोद्गाता ।३९।
रेतः सेकः पोतः पाकः भूमिर्वह्निः कृष्णः काकः ।
पाथो वायुर्भेकः शाकः नेयं नेता नीतिर्नाकः ॥४०॥
दानं दाता दृष्टिर्दीपः मानं माता मुष्टिर्मोपः
सूर्यश्चन्द्रस्तापस्तोपः खड्गो वीरः कृष्टिः कोपः ॥४१॥

वेश्या वश्यो विष्टिर्वेषः लेख्यं लेखा रेखामेषः ।
पिष्टं पेष्यं पुष्टिः पोषः शाक्यः शाक्तः शक्तिः शेषः ॥४२
देहः प्राणश्चित्तं बुद्धिः जीवो विद्या क्लेशाः शुद्धिः ।
आशा कालो मुक्तिर्बन्धः शब्दो रूपं स्पर्शो गन्धः ॥४३॥
हस्तौ पादौ मूर्धा केशाः ऊर्ध्वश्चाधो मध्यो देशः ।
धर्माधर्मौ मोहावेशः पूर्णौ लेशः सृष्टिः सेशा ॥४४॥
एतत्सर्वं यस्मिंस्तथ्यं भाति स्वप्ने यद्वद् दृश्यम् ।
सर्वस्यूतं सर्वासक्तं यच्चित्तत्वं तद्ब्रह्माहम् ॥४५॥
एतत्मत्त्यैः पाठं पाठं श्रद्धाचित्तो नित्यं भक्त्या ।
दाहं दाहं दोषान् सर्वान् जीवन्मुक्तो ब्रह्माप्येति ॥४६॥
यस्साङ्ख्येषु कृतश्रमो मुहुरहो योगेषु योगीश्वरो ।
वेदान्तेषु विदांवरोऽतिनिपुणः ख्यातो यशस्वीकुले ॥
सोऽयं जातिकुलाभिमान- मुचितं त्यक्त्वा तुरीयाश्रमे ।
स्थित्वा तत्वनिरूपणं समकरोद् ब्रह्मण्यदेवो यतिः ॥४७॥

इतिश्रीमत्परमहंस परिव्राजकाचार्य्य गोवर्द्धन मठाधीश्वर
शङ्कराचार्य्य श्रीमन् मधुसूदन तीर्थ स्वामि शिष्य
पण्डित स्वामि श्रीशङ्कर ब्रह्मण्यदेव तीर्थ
विरचितम् चित्तत्त्वनिरूपणम् ।

---

॥ ओ३म् ॥

# अथ शङ्कराष्टकम् ।

कदाचित्कैलासे गिरिवर सुता सङ्ग मुदितो
वसानो वैयाघ्रं मुनिगण मुखोद्गीतमहिमा ॥
पिनाकी भूतेशो रचितनटवेषोऽखिलगुरु
जगद्व्यापी शम्भुर्नयन पथगामी भवतु मे । १ ।
भुजे सव्ये शूलं शिरसि सुरसेव्यां सुरनदीं
ललाटे शीतांशुं निशितपरशुं दक्षिणकरे ॥
दधानो देवेड्यो भुजगपतिहारी त्रिनयना
जगद्व्यापी शम्भुर्नयन पथगामी भवतु मे । २ ॥
वदान्यस्सम्मान्यः श्रुतिशतशिरोगीतचरितः
शरण्यो ब्रह्मण्यो विरतगणगण्यो गिरिशयः ॥
कपर्दी भस्माङ्गो दुरितदलना वद्धहृदयो
जगद्व्यापी शम्भुर्नयन पथगामी भवतु मे ॥३॥
मखारिः कामारिर्भुवन भयहारी पुररिपु
र्मनोहारी शर्वः-श्रुतिवन विहारी पशुपतिः ॥
वरेण्यो भ्राजिष्णु भ्रमपटल भङ्गैक निपुणो
जगद्व्यापी शम्भुर्नयन पथगामी भवतु मे॥४॥
दुराराध्योऽवाध्यस्सकलकलना वन्धविधुरो
भवाध्यक्षो लक्ष्यो निगमवचसां भेदरहितः ॥

शिवश्शान्तश्शुद्धो निजजन कृपा क्रान्त हृदयो
जगद्व्यापी शम्भुर्नयन पथगामी भवतु मे ॥५॥
न यस्यान्तं यातोऽखिल सुरगणाराधित पदो
रमाकान्तो विष्णुस्सकल सुरवन्द्यो विधिरपि ॥
गतान्येषां गाथा चकित मभिधत्ते श्रुतिरभी
जगद्व्यापी शम्भुर्नयन पथगामी भवतु मे ॥६॥
न याचे साम्राज्यं कनकरुचिरं चेन्द्र भवनं
नवा रम्या रामा नच सुतशताढ्यं सुविभवम् ॥
परं याचे याचे तव चरणसेवां पशुपते
जगद्व्यापी शम्भुर्नयनपथगामी भवतु मे ॥७॥
दयासिन्धो सेन्दो निखिल भववन्धो सुरगुरो
हर त्वं संसारं विगतसुखसारं सुखनिधे ॥
न वै जाने जाने वरद वरदेशं त्वदपरं
जगद्व्यापी शम्भुर्नयनपथगामी भवतु मे ॥८॥
शङ्करे यो मनः कृत्वा शङ्करं शङ्कराष्टकम् ।
पठेत्सततं यो मुदायुक्तः शङ्करेण प्रमोदते ॥९॥

इति श्रीमत्परमहंस परिव्राजकाचार्य्य गोवर्द्धन मठाधीश्वर
शङ्कराचार्य्य श्रीमन्मधुसूदनतीर्थ स्वामि शिष्य
पण्डित स्वामि श्रीशङ्कर ब्रह्मण्य देवतीर्थ
विरचितम् शङ्कराष्टकम् ।

---

ओ३म् ।

# अथ जगदम्बाष्टकम् ।

जनाः केचित्त्वत्तो जननि निजजाड्यं शमयितुं
यतन्तेऽहोरात्रं नवतरसुखं लब्धुमपरे
स्तुवन्ति त्वां नित्यं यजनविधिसक्तास्तदितरे
जगन्मातर्याचे तव चरणसेवां सुखवहाम् ॥१॥
पठित्वा शास्त्रौघाञ्छ्रुतिशतरहस्यानुपमान्
जना जायन्ते ये तव भजनभावैकविधुराः
समर्थः कस्त्रातुं त्वदनुस्मृति हीनां स्त्रिजगति
जगन्मातर्याचे तव चरणसेवां सुखवहाम् ॥२॥
न शक्तः स्रष्टुं को हरिरपि न शक्तस्सुखयितुं
हरो हर्तुं नो वै जगदिदमशेषं श्रुतिनुते
विना शक्तिं शक्तो जगति किमु दृष्टो रचयितुं
जगन्मातर्याचे तव चरणसेवां सुखवहाम् ॥३॥
निमित्तं किं कालः प्रकृतिरथवेशः किमणवः
स्वभावो वा सृष्टेरिति च विवदन्तां जडधियः
त्वमेवास्या हेतुर्भवति तव हेतुर्न भवति
जगन्मातर्याचे तव चरणसेवां सुखवहाम् ॥४॥
जगद्भानुर्भानुर्नहि भवति भानुस्तवपुरो

जगच्चन्द्रश्चन्द्रस्त्रसति तव दृष्ट्वा मुखकलाम्
महस्वन्ते मातर्हरिहरविरञ्चा न मिमते
जगन्मातर्याचे तव चरणसेवां सुखवहाम् ॥५॥
पदम्मे माहेशं गणपतिपदं वा न रुचितं
नवा विष्णोर्धामामलमुनिमरालभिलषितम्
न नाकेन्द्रस्थानं विबुधरमणीगीतलसितम्
जगन्मातर्याचे तव चरणसेवां सुखवहाम् ॥६॥
त्यजेद् धर्म्मं धर्त्री जलमपि जलत्वं परिहरे
न्न्यसेदौष्ण्यं वह्निर्गमनमपि जह्याज्जवगतिः
क्षिपेत् खत्वं खंनो क्षिपति जननी जातु ममतां
जगन्मातर्याचे तव चरणसेवां सुखवहाम् ॥७॥
क्षुधाक्रान्ताः श्रान्ता विकलकरणा दीनमनसो
यथा बालांस्तूर्णं तरुणकरुणा यान्ति जननीम्
तथा तूर्णं मातः शरणमुमयातोऽस्मि भवतीम्
जगन्मातर्याचे तव चरणसेवां सुखवहाम् ॥८॥
जगन्मातुरिदं स्तोत्रं यः पठेच्छ्रद्धयान्वितः
भुक्तिमुक्ती समाप्नोति जगदम्बाप्रसादतः ॥९॥

इति श्रीमत्परमहंस परिव्राजकाचार्य्य गोवर्द्धनमठाधीश्वर
शङ्कराचार्य्य श्रीमन्मधुसूदनतीर्थस्वामिशिष्य पण्डित
स्वामि श्रीशङ्करब्रह्मण्यदेवतीर्थ विरचितं
जगदम्बाष्टकम् ।

ओ३म्

# अथ गणेशाष्टकम् ।

सुराराध्यो वन्द्यस्सकलजगता मिष्टफलदः
त्रिशूली विघ्नेशः शितपरशुपाणिस्त्रिनयनः
गणाध्यक्षो दक्षो दनुजकुलभक्षो भवसुतो
गजास्यो हेरम्बो हरतुज नतातापविपिनम् ॥१॥
गले बिभ्रन्मालां रविकर निभां रक्तकुसुमां
सुभौली रक्ताक्षः परमशुचिरक्ताम्बरधरः
सुवक्त्रो भालेन्दुर्नगपतिकिशोरीस्तनधयो
गजास्यो हेरम्बो हरतु जनतातापविपिनम् ॥२॥
निरातङ्को भीमस्सकलगुणसीमा हितकरो
दयासिन्धुर्देवोऽखिलगुणिगणोद्गीतचरितः
प्रहर्त्ता विघ्नानां कनकरुचिरस्तुन्दिलवपु
गं.तास्पो हेरम्बोहरतुजनतातापविपिनम् ॥३॥
लभंते नोमीष्टं फलमपि जनाः कर्म्मनिरता
न योगं योगज्ञा विरतिमनसो नापिविरतिम्
पठन्तो नो विद्यां मुहुरपि यदाराधनमृते
गजास्यो हेरम्बो हरतु जनतातापविपिनम् ॥४॥
यदीयं शृण्वन्तो निजहृदि पठन्तस्सुचरितं

धनं धान्यं धामाक्षत नरपतित्वं सुमतिताम्
लभन्ते मोदन्ते ननु सुकृतिनो मानवगणा
गजास्यो हेरम्बो हरतु जनतातापविपिनम् ॥५॥
मुदा लुण्ठन् देवो गिरिवरसुतोत्सङ्गभवने
चरन् क्रीडां नित्यं सहजगुहदेवेन वलिना
ब्रुवन् वाचो रम्याः पशुपतिमनोमोदजनिका
गजास्यो हेरम्बो हरतु जनतातापविपिनम् ॥६॥
कपित्थैर्जम्बीरैरभिनवफलैः प्रीतिजनकै
र्जपापुष्पैर्धूपैर्मधुरसयुतैर्मोदकमयैः
महाभोज्यैरर्च्चानिहितमनसामार्त्तिहरणो
गजास्यो हेरम्बो हरतु जनतातापविपिनम् ॥७॥
महावीरो धीरो निगमतरुकोरोऽमृतमयो
यतो जातं विश्वं विविधरचनाभोगसुभगम्
तमाखुस्कन्धत्ते सुखकरमहो पृष्ठपिठरे
गजास्यो हेरम्बो हरतु जनतातापविपिनम् ॥८॥
इदं स्तोत्रमधीयानो मुञ्चति सर्वतो भयम्।
कामान्सर्वानवाप्नोति गजाननप्रसादतः ॥९॥
इति श्रीमत्परमहंसपरिव्राजकाचार्य्यं गोवर्द्धन मठाधीश्वर-
शङ्कराचार्य्य श्रीमन्मधुसूदनतीर्थस्वामिशिष्य
पण्डितस्वामि श्रीशङ्कर ब्रह्मण्यदेव तीर्थ
विरचितं गणेशाष्टकम्।

ओ३म्



# अथ सूर्य्याष्टकम् ।

तपस्यन्तस्सन्तो यमनियमवन्तश्चिरतरं
क्षमन्ते ऽन्यान्देवान् कथमपि नरास्संविषययितुम्
स्त्वयन्तेषां दृष्टिं तरुणकृपयायासि तरणे
तमो हार्दं सान्द्रं त्वमपनय मे वासरमणे ॥१॥
हरिश्शम्भुर्ब्रह्मा गणपतिमुखा ये सुरगणाः
श्रुतास्ते श्रोत्राभ्यामिह न तु नृणां तैः परिचयः
प्रसिद्धस्त्वं देवस्सकल जगतामक्षिविषय
स्तमो हार्दं सान्द्रं त्वमपनय मे वासरमणे ॥२॥
समायात्याहूतिर्हुतिभुजि भवन्तं समसिता
भवज्जाता वृष्टिर्निखिलजनसंघं सुखयति
अतस्त्वम्भानोऽतश्चरसि भुवने भूतभृतये
तमो हार्दं सान्द्रं त्वमपमनय मे वासरमणे ॥३॥
निमज्जेत्संसारो निविड़तमसि प्रोज्झित सुखो
भवेच्छ्रौतं कर्म स्मृतिनिगदितं वा क्वजगति
भवेद् ध्वान्ताराते यदि च तव भानोरनुदयः
तमो हार्दं सान्द्रं त्वमपनय मे वासरमणे ॥४॥
सकृद् ध्यातुर्ध्यातं हरति हृदयानन्ततपनं

वरेण्यं भर्गस्ते निज हृदयतापोपहतये
नरा ध्यायन्ते तत्प्रतिदिनमहो भास्कर मह
स्तमो हार्दं सान्द्रं त्वमपनय मे वासरमणे ॥५॥
कथं पूर्वोदेति व्रजति कथमस्तं क्व वसति
किमाधारो धत्ते वियति गति मूर्द्धां न पतति
वदन्त्येतां वाचामनधिगतशास्त्रा हतधिय
स्तमो हार्दं सान्द्रं त्वमपनय मे वासरमणे ॥६॥
त्वमन्नं त्वं प्राणस्त्वमसि वहिरन्तस्त्रिजगतः
स्वयं ज्योतिः सूर्य्यं श्रुतिवचनतात्पर्यं विषयः
यजन्तेऽतो लोकाः प्रथितयशसं त्वा प्रतिदिनं
तमो हार्दं सान्द्रं त्वमपनय मे वासरमणे ॥७॥
रवे रक्ताक्षस्ते कनकपुरुषो मण्डलगतो
य एष श्रुत्या यो बुधसकलपापोपहतये
निरुक्तस्त्वं सोऽसौ भवसि भजतां पापहतये
तमो हार्दं सान्द्रं त्वमपनय मे वासरमणे ॥८॥
सूर्य्याष्टकमिदं पुण्यं यः पठेत्सूर्य्यं सम्मुखे ।
सर्वंपापविनिर्मुक्तस्सूर्य्यं लोके महीयते ॥९॥
इति श्रीमत्परमहंसपरिव्राजकाचार्य्यं गोवर्द्धनमठाधीश्वर
शङ्कराचार्य्यं श्रीमन्मधुसूदनतीर्थ स्वामि शिष्य पण्डित
स्वामि श्रीशङ्करब्रह्मण्यदेवतीर्थविरचितंसूर्य्याष्टकम् ।

---

ओ३म्

# अथ विष्णु देवाष्टकम् ।

गुहागूढं सत्यं श्रुतिशतरहस्यं सुखमयं
पुराणं प्रत्यञ्चं यमजमचलं योगनिरताः
महाघोरा मत्वा जगदिदमभेद्यं प्रजहते
स वै वन्द्यो विष्णुर्भवतु भजतो मेऽक्षिविषयः ॥१॥
न यो द्रष्टुं शक्यो निखिलकरणैर्बाह्य विषयै
विना यं नो शक्तः किल करणवर्गो विषयितुम्
परश्शुद्धो नित्यो निखिलकरणव्रातविधुरः
स वै वन्द्यो विष्णुर्भवतु भजतो मेऽक्षिविषयः ॥२॥
यतो भीतो वातस्सरति सततं शासनरतो
यतो भीतस्सूर्यस्तपति विततं विश्वमखिलम् ॥
यतो भीताश्चैते यमदहननाकाधिपतयः
स वै वन्द्यो विष्णुर्भवतु भजतो मेऽक्षिविषयः
न विद्यन्ते यस्मिन्नजर अमरे वृत्यतिशया
निवाप्याय मुक्तो जनिमृतिभयाद्यं विहरति
श्रिता लोका यत्र श्रितिरपि न यस्यास्तिबृहत
स्सवै वन्द्यो विष्णुर्भवतु भजतो मेऽक्षिविषयः ॥४॥
नयं सूर्याचन्द्रावनिलतडितस्तारकगणाः

प्रकाशन्ते देवं चकितमनसस्तेन विधृताः
इदं सर्वम्भातं भवति नितरां यस्य महसा
स वै वन्द्यो विष्णुर्भवतु भजतो मेऽक्षिविषयः ॥५॥
न साङ्ख्यैर्योगैर्वा प्रणिहितमनोभिः प्रतिदिनं
नवा काणादैर्य्यस्सुदृढतरतर्कात्मनिपुणैः
समादिष्टो दृष्टाऽखिलजनतिविष्टोऽपि परम
स्स वै वन्द्यो विष्णुर्भवतु भजतोमेऽक्षिविषयः ॥६॥
महान्तो यज्वानो विजितमनसश्चापि यमिनो
लभन्ते नो मुक्तिङ्कथमपि यदावेदनमृते
अलभ्यो व्याख्यानैः श्रुतिशतपथैर्यो न विदित
स्स वै वन्द्यो विष्णुर्भवतु भजतोमेऽक्षिविषयः ॥७॥
यतश्चेदं सर्वं भवति य इदं यश्च सकलं
स्थितं यस्मिन्सर्वं प्रविशति च यत्रैव सततम् ॥
न भिन्नो यो भेदैर्गतगलितभेदैरधिगत
स्स वै वन्द्यो विष्णुर्भवतु भजतो मेऽक्षिविषयः ॥८॥
य एतद्वैष्णवं स्तोत्रं ज्ञात्वा विष्णुमयं जगत्
अहरहः पठेच्छुद्धो विष्णुरेव न सन्शयः ॥९॥
इतिश्रीमत्परमहंस परिव्राजकाचार्य्य गोवर्द्धमठाधीश्वर
शङ्कराचार्य्य श्रीमन्मधुसूदनतीर्थस्वामिशिष्य पण्डित
स्वामि श्रीशङ्करब्रह्मण्यदेवतीर्थ विरचितं
विष्णुदेवाष्टकम् ।

योग मकरन्दः योग मञ्जरी सहितः

पुस्तक मिलनेका ठिकाना—

बा० शिवदयालजी ज[illegible]दासजी खेमका

कालेज स्ट्रीट नं० ६३

कलकत्ता ।

( और )

श्रीशङ्करब्रह्मण्यदेवतीर्थ स्वामी

( काशी )

मुद्रक—हंसराज शर्मा ।

"राजस्थान प्रेस" कलकत्ता ।